स ऐक्षत लोकान्नु सृजा इति" "स इमाँल्लोकानसृजत" इति ईक्षापूर्व्विकामेव सृष्टिमाचष्टे। क्वचिच्च षोडशकलं पुरुषं प्रस्तुत्याह "स ईक्षाञ्चक्रे स प्राणमसृजत" इति। ईक्षतेरिति च धात्वर्थनिर्देशोऽभिप्रेतः यजतेरितिवत् न धातुनिर्देशः। तेन "यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इत्येवमादीन्यपि सर्व्वज्ञेश्वरकारणपराणि वाक्यानि उदाहर्त्तव्यानि। यत्तु उक्तं सत्त्वधर्म्मेण ज्ञानेन सर्व्वज्ञं प्रधानं भविष्यतीति, तन्नोपपद्यते। न हि प्रधानावस्थायां गुणसाम्यात् सत्त्वधर्म्मो ज्ञानं सम्भवति। ननूक्तं सर्व्वज्ञानशक्तिमत्त्वेन सर्व्वज्ञं भविष्यतीति। तदपि नोपपद्यते। यदि गुणसाम्ये सति सत्त्वव्यपाश्रयां ज्ञानशक्तिमाश्रित्य सर्व्वज्ञं प्रधानमुच्येत कामं

---

कार्य्याभेदात्स्रक्ष्यामीत्याह॥ प्रेति॥ एवं तत् सदीक्षित्वा आकाशं वायुञ्च सृष्ट्वा तेजः सृष्टवदित्याह॥ तदिति॥ मिषत् ज्वलत् सत्त्वाक्रान्तमिति यावत्। "सजीवाभिन्नः परमात्मा" "प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्य्यं तपो मन्त्राः कर्म्म लोकाः लोकेषु नाम च" इत्युक्ताः षोडशकलाः, ननु इक्श्तिपौ धातुनिर्देशे इति कात्यायनस्मरणादीक्षतेरिति पदेन तिबन्तेन धातुरुच्यते। तत्र धात्वर्थ ईक्षणं कथं व्याख्यायते इत्याशङ्क्य लक्षणयेत्याह॥ ईक्षतेरिति चेति॥ इतिकर्त्तव्यताविधेर्यजतेः पूर्व्वत्वमिति जैमिनिसूत्रे यथा यजतिपदेन लक्षणया धात्वर्थो याग उच्यते तद्वदिहापीत्यर्थः। सौर्य्यादिविकृतियागस्याङ्गानामविधानात् पूर्व्ववत्त्वं दर्शादिप्रकृतिस्थाङ्गवत्त्वमिति सूत्रार्थः। धात्वर्थनिर्देशेन लाभमाह॥ तेनेति॥ सामान्यतः सर्व्वज्ञो विशेषतः सर्व्वविदिति भेदः ज्ञानमीक्षणमेव तपः। तपस्विनः फलमाह॥ तस्मादिति॥ एतत्कार्य्यं सूत्राख्यं ब्रह्म। केवलसत्त्ववृत्तेर्ज्ञानत्वमङ्गीकृत्य प्रधानस्य सर्व्वज्ञत्वं निरस्तं। सम्प्रति न केवलजडवृत्ति-

रजस्तमोव्यपाश्रयामपि ज्ञानप्रतिबन्धकशक्तिमाश्रित्य किञ्चिज्ज्ञत्वमुच्यते। अपि च नासाक्षिका सत्त्ववृत्तिर्जानाति नाभिधीयते। न चाचेतनस्य प्रधानस्य साक्षित्वमस्ति। तस्मादनुपपन्नं प्रधानस्य सर्व्वज्ञत्वं। योगिनान्तु चेतनत्वात् सर्व्वोत्कर्षनिमित्तं सर्व्वज्ञत्वमुपपन्नमित्यनुदाहरणं। अथ पुनः साक्षिनिमित्तमीक्षितृत्वं प्रधानस्य कल्प्येत यथाग्निनिमित्तमयःपिण्डादेर्दग्धृत्वं। तथा सति यन्निमित्तमीक्षितृत्वं प्रधानस्य तदेव सर्व्वज्ञं मुख्यं ब्रह्म जगतः कारणमिति युक्तं। यत् पुनरुक्तं ब्रह्मणोऽपि न मुख्यं सर्व्वज्ञत्वमुपपद्यते, नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासम्भवादित्यत्रोच्यते। इदं तावद्भवान् प्रष्टव्यः कथं नित्यज्ञानक्रियत्वे सर्व्वज्ञत्वहानिरिति; यस्य हि सर्व्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सो सर्व्वज्ञ इति विप्रतिषिद्धं; अनित्यत्वे हि ज्ञानस्य कदाचित् जानाति कदाचिन्न जानाति, इत्यसर्व्वज्ञत्वमपि स्यात्, नासौ ज्ञाननित्यत्वे दोषोऽस्ति। ज्ञाननित्यत्वे ज्ञानविषयः स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेत्, न प्रततौष्ण्यप्रकाशेऽपि सवितरि दहति प्रकाशयति, इति स्वातन्त्र्यव्यपदेशदर्शनात्। ननु सवितुर्दाह्यप्रकाश्यसंयोगे सति दहति प्रकाशयतीति व्यपदेशः

---

ज्ञानशब्दार्थः किन्तु साक्षिबोधविशिष्टा वृत्तिर्वृत्तिव्यक्तबोधो वा ज्ञानं। तच्चास्य प्रधानस्य नास्तीत्याह ॥ अपि चेति ॥ साक्षित्वमस्ति येनोक्तज्ञानवत्त्वं स्यादिति शेषः। ननु सत्त्ववृत्तिमात्रेण योगिनां सर्व्वज्ञत्वमुक्तमित्यत आह ॥ योगिनान्त्विति ॥ सेश्वरसांख्यमतमाह ॥ अथेति ॥ सर्व्वज्ञत्वं नाम सर्व्वगोचरज्ञानवत्त्वं न ज्ञानकर्तृत्वं ज्ञानस्य कृत्यसाध्यत्वादिति हृदि कृत्वा पृच्छति ॥ इदं तावदिति ॥ सर्व्वं जानातीति

स्यात्, न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्म्मसंयोगोऽस्तीति विषमो दृष्टान्तः। नासत्यपि कर्म्मणि सविता प्रकाशत इति कर्तृत्वव्यपदेशदर्शनादेवमसत्यपि ज्ञानकर्म्मणि ब्रह्मणस्तदैक्षतेति कर्तृत्वव्यपदेशोपपत्तेर्न वैषम्यं कर्म्मापेक्षायां तु ब्रह्मणि ईक्षितृत्वश्रुतयः सुतरामुपपन्नाः, किं पुनस्तत्कर्म्म यत् प्रागुत्पत्तेरीश्वरज्ञानस्य विषयोभवति इति। तत्त्वान्यत्वाभ्यामनिर्व्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः, यत् प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः किमु वक्तव्यं तस्य नित्यशुद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यज्ञानं भवतीति। यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसम्बन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति, न तच्चोद्यमवतरति

---

शब्दसाधुत्वं शङ्कते॥ ज्ञाननित्यत्व इति॥ नित्यस्यापि ज्ञानस्य तदर्थोपहितत्वेन ब्रह्मस्वरूपाद्भेदं कल्पयित्वा कार्य्यत्वोपचाराद्ब्रह्मणस्तत्कर्तृत्वव्यपदेशः साधुरिति। दृष्टान्तमाह॥ न प्रततेति॥ सन्ततेत्यर्थः। असत्यपि अविवक्षितेऽपि, ननु प्रकाशतेरकर्म्मकत्वात् सविता प्रकाशत इति प्रतियोगेऽपि जानातेः सकर्म्मकत्वात् कर्म्माभावे तदैक्षतेत्ययुक्तं इति तत्राह॥ कर्म्मापेक्षायामिति॥ कर्म्माविवक्षायामपि प्रकाशरूपे सवितरि प्रकाशत इति कथञ्चित् प्रकाशक्रियाश्रयत्वेन कर्तृत्वोपचारवच्चिदात्मन्यपि चिद्रूपेण कर्तृत्वोपचारान्न वैषम्यमित्युक्तं पूर्व्वं। अधुना तु कुम्भकारस्य स्वोपाध्यन्तःकरणवृत्तिरूपेक्षावदीश्वरस्यापि स्वोपाध्यविद्यायाः विविधसृष्टिसंस्कारायाः प्रलयावसानेनोद्बुद्धसंस्कारायाः समाभिमुखः कश्चित् परिणामः तस्यां सूक्ष्मरूपेण निलीनसर्व्वकार्य्यविषयकं ईक्षणं तस्य कार्य्यत्वात् कर्म्मसद्भावाच्च तत्कर्तृत्वं मुख्यमिति द्योतयति॥ सुतरामिति॥ ननु मायोपाधिकबिम्बचिन्मात्रस्येश्वरस्य कथमीक्षणं प्रति मुख्यं कर्तृत्वं कृत्यभावादिति चेत्। न। कार्य्यानुकूल-

# रत्नप्रभाभासितशाङ्करब्रह्मसूत्रभाष्यस्य. शुद्धिपत्र।

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | २ | अनकजावरमनन्त-मुखाकृतिं | अनकजाङ्गमनन्त-मुखाकृतिं |
| १ | ११ | भाषास्मिताऽस्य | भासा स्मितास्य |
| २ | १७ | सस्यादि | शस्यादि |
| २ | २८ | प्रतिष्ठा काम | प्रतिष्ठाकाम |
| ३ | १७ | स्वाथ | स्वार्थं |
| ११ | २४ | लक्षणा | लक्षणां |
| १४ | १७ | शून्यत्व | शून्यत्वं |
| १६ | १६ | व ते | वर्ण्यते |
| २५ | १४ | कर्म्मणा | कर्म्मणां |
| २६ | २८ | मुक्ति | मुक्तिः |
| २७ | २६ | प्रवृत्ति वंध | प्रवृत्तिंबाध |
| २८ | ११ | प्रवर्त्त्यते | प्रवर्त्तते |
| ३३ | १७ | व्युत्पत्या | व्युत्पत्त्या |
| ३४ | १९ | मुक्तित्त्व | मुक्तित्व |
| ३५ | २९ | वदा | वेदा |
| ३५ | १० | विप्रतित्तीनां | विप्रतिपत्तीनां |
| ४० | १३ | पुरूष | पुरुषं |
| ४२ | २१ | शाखास | शाखासु |
| ४६ | १२ | ज्ञात् | ज्ञानात् |
| ४८ | २७ | ज्ञात् | ज्ञानात् |
| ४९ | ५ | र्थत्व | र्थत्वं |
| ५० | २२ | दीद् | दीत् |
| ५१ | ५ | त्वाद् | त्वात् |
| ५२ | ९ | दीद् | दीत् |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ५३ | ७ | तद् | तत् |
| ५६ | १२ | चाख्र | चाख |
| ५७ | ७।८ | प्यंते | थ्यंते |
| ५८ | ८ | प्रस्मया | प्रह्वया |
| ७१ | ६ | ष्ननभाव | ष्ननाभाव |
| ९१ | १४ | युक्त्यावभास | युक्त्याभास |
| ९६ | २२ | सर्गान्मुखः | सर्गोन्मुखः |